# श्रीकाव्यकौस्तुभः
# Śrī Kāvya-kaustubhaḥ
# The Jewel of Poetry

Version 0.2

श्रीबलदेवविद्याभूषणः
by Baladeva Vidyābhūṣaṇa

March 15, 2004

# Contents

# Chapter 1

# प्रथमा प्रभाः काव्यफलादिनिर्णयः

कलाभिर्निर्भृतः श्रीमान् राधया समलङ्कृतः।
दीव्यत्कुवलयः सोऽयं विधुर्विजयतेतराम्॥

प्रारिप्सितस्यास्य शास्त्रस्य काव्याङ्गत्वात्काव्यफलमेव फलमिति तावदाह।

कीर्तिः सार्वज्ञ्यमानन्दो धनादीनि च काव्यतः।

सार्वज्ञ्यं देवमानवादिप्राणिचेष्टावगतिरूपः। आनन्दो रसानुभवसमुद्भूतः धनं नृपतिप्रसादलब्धा हस्त्यश्वादिसम्पत् आदिना धर्मकाममोक्षाः। तत्र धर्मो भगवद्वन्दनादिः। कामो धनद्वारकः। मोक्षो ज्ञानकाण्डे व्युत्पत्तिविधानाअदित्येतत्सर्वं काव्यादेव भवेदतस्तत्र पुंभिः सयत्नैर्भाव्यम्। तस्य हेतुमाह।

हेतुस्तस्य भवेच्छक्तिः शिक्षा निपुणता तथा॥

शक्तिः पूर्वसंस्कारः शिक्षा काव्यविदुपदेशः निपुणता तु व्याकरणाभिधानकोषच्छन्दःप्राचीनकाव्यादिनिभालनाद्व्युत्पत्तिः तस्य कावस्योद्भवे कारणम्। तस्य लक्षणमाह।

कविना निर्मितं वाक्यं काव्यम्।

चमत्कारकरगद्यपद्यात्मना रचितं कवेर्वाक्यं काव्यं। उदाहरणम् —

कोकिलकलकृतकम्पां तनुजितशम्पां प्रियां पश्यन्।
वपुरवनमितपयोदः समुदितमोदः स माधवो जयति॥

गद्यपद्ययोश्चमत्कारकरत्वं चातुर्यादेव भवति। चातुर्यं तु युक्तिविशेषेणार्थनियोजनम्। तथा हि वर्णयन्ति — शत्रोर्गदितवीर्यादेर्निर्जयान्नायकस्तुतिः। चातुर्यमिति पश्चात्तनं सम्बध्यते। उदा. —

उग्रप्राप्तधनुर्विद्यं सर्वज्ञं क्षात्रकुण्टकं।
गर्विष्टं खर्वयामास भार्गवं राघवाग्रणी॥

## दृष्टान्तेनाल्पवर्णेन महतोऽर्थस्य कीर्तनम्॥

उदा. —

नृगवत् स गतिं याति यो ब्रह्मस्वापहारकः।

अत्र नृगवदित्यनेन नृगाख्यायिकाव्यक्तिः।

## पद्येन लघुना वा स्याद्गम्भीरार्थप्रकाशनम्॥

यथा —

निजभक्तसुखार्थं यः कालमप्यतिवर्त्तते।
पुरुषाय नमस्तस्मै कस्मैचित्पुरुतेजसे॥

रावणेअ निपीडितः सुरैरभ्यर्थितो भगवान् द्वापर एव तद्विनाशकालं त्रेतां प्रकल्प्य तं विजिधान अदित्या तोषोतश्च तत्सुखाय बलिवृद्धिकालमन्यथयन् बलिं दूषयामासेति पद्यादस्मात्प्रकाशते॥

## अपारानन्दविज्ञप्तिर्या स्यान्न्यूनपदादिभिः।

यथा —

सस्मिता मृगशावाक्षो गाढमालिङ्गिता मया।
मा मा मेति यदब्रूत तन्मे कृन्तति मानसम्॥

अत्र मेत्यनन्तरं पीडयेति पदमूनं सत्तस्याः सुखसिन्धुमग्नतां बोधयति।

## हेतोरतिप्रसिद्धस्य न कुर्यादादरं क्वचित्॥

यथा —

न युद्धेन भ्रुवोः स्पन्दनैव वीरा निबारिताः।

विख्यातसहितोक्तिश्चेत्तत्सादृश्याय कल्पते॥

यथा —

युवामेव हि विख्यातौ त्वं बलैर्जलधिर्जलैः॥

अत्राम्बुधिसाहित्येनोक्तिर्नृपतेस्तत्तुल्यतायै स्यात्।

ख्यातदोषनिरासश्च वीक्ष्यते गुणवर्णनात्।

यथा —

मुधा निन्दति संसारं कंसारिर्यत्र पूज्यते।

चातुर्यं कवितायां स्यादेवमाद्यर्थयोजनं॥ स्फुटं, इदं काव्यलक्षणं कविवचनमात्रेणातिव्याप्तं निर्मितमित्युक्तेः। वाक्यं रसात्मकं काव्यमिति तु रामः सहसा तया क्रीडतीत्यत्रातिव्याप्तं रसात्मकवाक्यत्वात्। अदोषौ सगुणौ सालङ्कारौ शब्दार्थौ काव्यमिति तु कुरङ्गनयनेत्यत्रातिव्याप्तम् तादृशशब्दार्थरूपत्वात्। अथास्य शरीरादिस्वरूपमाह॥ शब्दार्थविग्रहं काव्यमिति सम्बध्यते। शब्दार्थशरीरं काव्यमिति।

तस्यात्मा तु रसो व्यङ्ग्यस्तदन्यः प्राण उच्यते।

रसभावादिर्व्यङ्ग्यः काव्यस्यात्मा। वस्त्वादिस्तु प्राणः।

रसभावतदाभासभावशान्त्यादिको गणः।
सर्वोऽपि रस्यमानत्वाद्रसशब्देन कीर्तितः॥

स्फुटम्।

उत्कर्षकारणानि स्युर्गुणालङ्काररीतयः॥

ओजःप्रभृतयो गुणाः शौर्यादिवत् काव्यस्योत्कर्षकाः।

अनुप्रासोपमादयोऽलङ्काराः कुण्डलकङ्कणादिवत्।
वैदर्भीप्रमुखा रीतयस्त्वङ्गसंस्थानविशेषवत्।
दोषाः श्रुतिकटुत्वाद्या भवेयुरपकर्षकाः।

काणत्वादिवत् श्रुतिकटुत्वादयः काव्यमपकर्षयन्तस्तस्य दोषाः स्युः। गुणादिषु ये यद्धर्मा यथा यदुत्कर्षयन्त्यपकर्षं यान्ति च तत्तूर्द्धं वक्ष्यामः।

इति काव्यकौस्तुभे काव्यफलादिनिर्णयः प्रथमा प्रभा॥

# Chapter 2

## द्वितीया प्रभाः शब्दार्थतद्वृत्तिनिर्णयः

अथ काव्यविग्रहभूतयोः शब्दार्थयोः क्रमात्स्वरूपमाह ॥

मुख्यो लाक्षणिकः शब्दो व्यञ्जकश्चेति स त्रिधा ॥

मुख्यो वाचकः।

अर्थास्त्वेषां क्रमाद्वाच्यलक्ष्यव्यङ्ग्याः प्रकीर्तिताः।

वाच्यादीनां स्वरूपमाह।

वाच्यार्थोऽभिधया वेद्यो लक्ष्यो लक्षणया भवेत्।
व्यङ्ग्यो व्यञ्जनया तस्मात्तिस्रः शब्दस्य वृत्तयः॥

एक एव शब्दस्तिसृभिर्वृत्तिभिस्त्रिविधः संस्त्रिविधानर्थान् बोधयति। यथा गङ्गाशब्दोऽभिधया प्रवाहं लक्षणया तीरं व्यञ्जनया तु शैत्यादीनीति। शक्तिरेवाभिधा वृत्तिर्व्यापारः क्रिया चेति पर्यायशब्दाः।

अथाभिधाया वाचकस्य च लक्षणमाह।

यया स्वाभाविको वृत्त्या शब्दस्यार्थोऽवगम्यते।
साभिधा योगतस्तस्या वाचकोऽसौ प्रकीर्तितः॥

उच्चारितमात्राच्छब्दाद्यः साहजिकोऽर्थः प्रतीतः तत्र शब्दस्य या वृत्तिः साभिधा। तदाश्रयः शब्दो वाचकः यथा गङ्गेयमित्युक्ते गङ्गाशब्दात्साहजिकतयाऽवगते प्रवाहविशेषे तस्य वृत्तिरभिधा तया युक्तोऽसौ तस्य वाचकः।

अभिधा बोधयेदर्थं सङ्केतसहचारिणी।

अस्माच्छब्दादयमर्थो बोद्धव्य इतीश्वरेच्छासङ्केतः।

सङ्केतो गृह्यते यस्माज्जात्यादिषु चतुर्ष्वतः।

चतुर्धा वाचकः केचिज्जातावेवेति मन्वते।

जातिगुणक्रियासंज्ञारूपेषु चतुर्ष्वर्थेषु ब्राह्मणः श्यामः पाचको डित्थ इत्यादयश्चतुर्विधाः शब्दाः क्रमात्सङ्केतवन्तः। जात्यादयश्च सङ्केतिताः कथ्यते। तत्र जातिर्ब्राह्मणपिण्डादिषु ब्राह्मणत्वाद्या व्यवहारनिर्वाहिका। गुणः सजातीयव्यावृत्तिधीहेतुः श्यामादिः। श्यामादयो हि जन्तून्सजातीयेभ्यो गौरादिजन्तुभ्यो व्यावर्तयन्ति। क्रिया पूर्वापरीभूताङ्गा पाकाद्या। संज्ञा तु वक्तृस्वेच्छाकल्पितशब्दरूपा स्वयं वाच्यवाचकभावभाक्। एषु व्यक्तिधर्मेष्वेव तेषां शब्दानां सङ्केतः। तैर्व्यक्तीनामाक्षेपादर्थक्रियाकारिता सिद्धा। व्यक्तिषु तु सङ्केतो नानन्त्याद्व्यभिचाराच्च। अनन्ता हि व्यक्तयस्तासु सङ्केतो ग्रहीतुमशक्यः। असङ्केतितब्राह्मणव्यक्तेरिव शूद्रादिव्यक्तेरपि ब्राह्मणशब्दात्प्रतीतिः स्यादगृहीतसङ्केततायास्तौल्यादिति व्यभिचाराच्च तास्वसौ न ग्राह्यः, न च गवादिगतानां श्यामादिगुणानां गुडादिगतानां पाकादिक्रियाणां बालादिगतानां डित्थादिसंज्ञानां च प्रत्यक्षतो भेदसिद्धौ व्यक्तिसङ्केतपक्षोक्तो दोषः सम इति वाच्यं। गुणादीनामप्यैक्यत्वात्। तेषां भेदस्फूर्तिस्त्वाश्रयभेदादेव न तु स्वतः। दर्पणादिभेदान्मुखभेदवत्। प्रत्यभिज्ञया धर्मभेदग्रहस्य बाधादाश्रयभेदहेतुकाद्भेदधीरिति। अथवा जातिवाच्येव सर्वोऽपि शब्दः। तथाहि — मुदिरमरकतकोकिलादिष्वयं श्यामोऽयं श्याम इत्यादिप्रत्यक्षाविशेषाच्छ्यामत्वादि गुडतण्डुलपाकादिष्वयं पाकोऽयं पाक इति पाकादित्वम्। बालतरुणकीरोच्चारितेषु डित्थादिशब्देष्वयं डित्थोऽयं डित्थ इति डित्थादित्वमिति सर्वजातेरेवानुभवाद्।

वाचको यौगिको रूढो योगरूढश्च कीर्तितः।

तत्राद्यः पाचकादिरवयवशक्त्या वाच्यं बोधयति। मध्यमो मण्डपादिः समुदायशक्त्या। अन्त्यस्तु पङ्कजादिरुभयशक्त्येति।

शक्त्यार्थबाधे तद्युक्तो ययार्थोऽन्यः प्रतीयते।

सा लक्षणा तया योगाच्छब्दो लाक्षणिकः स्मृतः॥

## जहत्स्वार्थाऽजहत्स्वार्था तथा स्यादुभयात्मिका।
## द्विधा रूढिफलाभ्यां सा

कलिङ्गः साहसीत्यादौ कलिङ्गादिशब्दो देशविशेषादिरूपे स्वार्थेऽसम्भवन् रूढिमाश्रित्य यया स्व-संयोगसम्बन्धवन्तः पुरुषादिमन्यार्थं बोधयति, सा रूढिलक्षणा। गङ्गायां घोषः प्रतिवसतीत्यादौ गङ्गादिशब्दो जलमयादिरूपे स्वार्थेऽसम्भवन्प्रयोजनमुद्दिश्य यया स्वसामीप्यादिसम्बन्धवन्तं त-टादिमन्यार्थं बोधयति, सा फललक्षणा। गङ्गातटे घोष इति प्रतिपादनालभ्यस्य शैत्याद्यतिशयस्य बोधनमिहफलं जहत्स्वार्थेयं। देशादेः प्रवाहादेश्च स्वार्थस्य त्यागाज्जहत्स्वार्थोऽयमिति द्विती-यान्यपदार्थो बहुव्रीहिः। कुन्ता गच्छन्तीत्यजहत्स्वार्था स्वार्थानां कुन्तानां गतावत्यागात्। एवं छत्रिणः प्रयान्तीति छत्रिपदस्यैकसाथवाहित्वे लक्षणा। तत्त्वेन छत्रिणस्तदन्येषां चावबोधनात्। काकेभ्यो दधि रक्षतामित्यत्र काकपदस्य दध्युपघातकेषु लक्षणा। तेन तेषां बोधनात्। सोऽयं देवदत्त इत्यादौ जहदजहत्स्वार्था तत्कालैतत्कालयोस्त्यागात्पिण्डमात्रमयात्यागाच्च। एवं रथो गच्छतीत्यत्र चेति। गौणी स्याद्गुणयोगतः।

## लक्ष्माणगुणैर्योगाद्गौणी लक्षणोच्यते।

यथा सिंहो देवदत्त इति गौर्वाहीक इति च। अत्र सिंहादिशब्दो मुख्यया वृत्त्या देवदत्तादिशब्देन सहान्वयमप्राप्नुवन् शौर्यजाड्यादिसमानगुणसम्बन्धेन देवदत्तादिमन्यार्थं यया लक्षयति सा गौणी वृत्तिः। भेदे सत्यपि तादूप्यावगतिः फलम्।

## कार्यकारणभावादिसम्बन्धाद्बहुधा च सा।

सा लक्षणा। यथा मुक्तिः सत्सेवा, आयुर्घृतमित्यादि। अत्रान्यवैलक्षण्येन कार्यकारित्वं फलं।

यथा च हरिभक्तो हरिर्नृपभक्तो नृप इत्यत्र स्वस्वामिभावात्। अत्रालंघ्यवचस्त्वं फलं॥ क्वचिदन्व-यानुपपत्तिः क्वचित्तात्पर्यानुपपत्तिश्च लक्षणाबीजं बोद्यं। गङ्गायां घोष इत्यत्र प्रवाहे घोषान्वयनु-पपत्त्या तीरे लक्षणा। कुन्ताः प्रवेश्यतामित्यत्र प्रवेशान्वये सम्भवत्यपि भोजने तात्पर्यानुपपत्त्या कुन्तधरेषु लक्षणेति॥

## अगूढगूढरूपत्वाद्व्यङ्ग्यस्येयं पुनर्द्विधा।

इयं फललक्षणाऽगूढव्यङ्ग्या गूढव्यङ्ग्या चेति द्विधा।

यथा

उत्कीर्णानि विचित्राणि नवोद्भिन्नानि सुभ्रुवः।
पिबन्ति दृग्भिरङ्गानि नन्दसुनोरहर्निशं

अत्रोत्कीर्णादिपदैस्तत्तत्सादृश्यानि लक्ष्याणि निर्माणसौष्टवादीनि तु व्यङ्ग्यानि। तानि च गूढान्येव सहृदयमात्रवेद्यत्वात्। दृग्भिः पानस्यासम्भवात्सादरावलोको लक्ष्यः। गाढासक्तिस्तु व्यङ्ग्या। सा चागूढा वाच्यवत्सर्ववेद्यत्वात्। इत्थं निरूपिततया लक्षणया योगाल्लाक्षणिकः शब्दः।

अथ व्यञ्जनाव्यञ्जनकयोर्लक्षणमाह।

विरतावभिधादीनां परोऽर्थो बोध्यते यया।
व्यन्ञ्जना सा तया योगाच्छब्दादिर्व्यञ्जको मतः॥

शब्दबुद्धिकर्मणां विरम्य व्यापाराभावादभिधादिषु स्वं स्वमर्थं निवेद्य विरतासु यया परार्थो बोध्यते सा शब्दार्थयोर्वृत्तिर्व्यञ्जना। तया योगाच्छब्दोऽर्थश्च व्यञ्जनकः। शाब्दार्था चेति सा द्विधा तयोराद्या पुनर्द्विधा।

एका स्यादभिधामूला लक्षणामूलिकापरा॥

तयोराद्यामाह।

शब्दस्यानेकार्थकस्याभिधायां
संयोगाद्यैरेकतो यन्त्रितायाम्।
तस्यार्थं या बोधयेद्वाच्यभिन्नं
तन्मूलासौ व्यञ्जनाविद्भिरुत्का॥

अनेकवाच्यस्य शब्दस्याभिधायां संयोगादिभिरेकस्मिन्नर्थे नियमितायां सत्यां तस्य या वृत्तिर्वाच्येतरार्थं बोधयेत्, साभिधामूला शाब्दी व्यञ्जना। स चक्रो हरिस्तच्चक्रश्च (?) भातीति चक्रसंयोगवियोगाभ्यां हरिशब्दस्याभिधा भगवति नियमिता। भीमार्जुनावित्यर्जुनः पार्थः साहचर्यात्। कर्णार्जुनाविति कर्णो राधेयो विरोधात्। सर्वं जानाति देव इति देवो भगवान् प्रकरणात्। चन्द्रो व्योम्नि भातीति चन्द्रः शशी देशविशेषात्। मधुना कोकिलो मत्त इति मधुर्वसन्तः मद-विधानसामर्थ्यात्। प्रमत्ता मधुना वधूरिति मध्वासवस्तद्विधानयोग्यत्वात्। एवं संयोगवियोगसाहचर्यविरोधप्रकरणदेशसामर्थ्ययोग्यताभिरेकसिन्नर्थेऽभिधाया नियमनं स्यात्॥

यथा

घनप्रभः कोऽपि निरीक्षितो मया
हरिश्चलापाङ्गिविदीप्तकौस्तुभः।
कृष्ट्वा नखैर्यः कुचकुम्भिकुम्भकान्
करोति मुक्ताधवलां वनस्थलीं॥

अत्र कौस्तुभसंयोगेन हरिशब्दः कृष्णमेवाभिधत्ते, सिंहस्तु व्यञ्जनया गम्यः। तयोरुपमा च। यथा वा — कलाभिर्निभृत इत्यादि। अत्र विधुशब्दः प्रकरणेन भगवन्तमभिधत्ते। चन्द्रस्तु व्यञ्जनया लभ्यः। ननु श्लेषस्यायं विषयः। परिवृत्त्यसहविध्वादिपदग्रहादिति चेन्न तस्यानवबोधात्। तथाहि नानार्थस्थले यत्रानेकत्र तात्पर्यग्राहकं प्रकरणादि युगपदवतरति न वा स श्लेषः।

यथा

सच्चन्दनधवलकुचा प्रियावनी सा घनच्छाया।

अत्र नायिकाटवी च प्रतिपद्यते। तत्र प्रकरणं युगपदवतरेन्नावतरेद्वा। यत्र त्वेकत्रैवावतरति तत्र व्यञ्जनैव। यथा कलाभिरित्यादौ।

अथ परामह

**लक्षणा स्वीकृता यस्मै तच्छैत्यादिफलं यथा।**
**बोध्यते सा बुद्धैरुक्ता व्यञ्जना लक्षणाश्रया॥**

गङ्गायां घोषः प्रतिवसतीत्यादिषु प्रवाहादिप्रतिपादनादभिधायां तटादिप्रतिपादनाच्च लक्षणायामुपक्षीणायां यया शैत्याद्यतिशयादि बोध्यते सा लक्षणामूला व्यञ्जना। फले नाभिधा सङ्केताभावान्न च लक्षणा हेत्वभावात्। मुख्यार्थबाधो मुख्यार्थसम्बन्धः फलरूढ्योकतरच्चेति त्रयं तस्यां हेतुः। किन्तु व्यञ्जनैव तस्य प्रत्यायिकेति स्वीकार्यैव सा॥

अथार्थीं व्यञ्जनामाह —

**वक्तृबोद्धव्यवाच्यादिवैशिष्ट्येनार्थतो यया।**
**अर्थान्तरं प्रतीयते सात्वार्थी व्यञ्जना स्मृता॥**

अर्थतो वाच्यलक्ष्यव्यङ्ग्यरूपात्।

तत्र वाच्यस्य व्यञ्जनकत्वं यथा —

विलुलितचिकुरा विलुप्तचित्रा त्वमसि वरश्रमसूचकाङ्ककान्तिः
अथ सपदि कृतातिचारुवेशा निवस मृगाक्षि वधूचयोऽभ्युपैति॥

अत्र स्मराक्रान्तेन कान्तेन भृशोपभुक्तां त्वां वीक्ष्य वध्वः परिहसिष्यन्ति। स्नानादिभिस्तच्चिह्ना-न्यपनयेति वाच्यार्थो व्यञ्जयति।

लक्ष्यस्य यथा —

व्रजपतिमतिसुन्दराङ्गमङ्गी कृतमहिलं नहि लक्षय त्वमक्ष्णा।
यदि तव भवने सुखाभिलाषः सुमुखि चकास्ति चयेन बान्धवानाम्॥

अत्र बन्धुभिः सह गृहे सुखस्पृहां विहाय व्रजराजसुतं पश्येति जहत्स्वार्थया लक्ष्योऽर्थस्तद्वीक्षा-दिनैव तव तारुण्यं सफलमिति व्यनक्ति। उभयत्र वक्तृबोध्ययोर्वैशिष्ट्यं।

व्यङ्ग्यस्य यथा —

अरविन्दवनी क्षरन्मरन्दा भ्रमदिन्दिन्दिरवृन्दवन्दितास्मिन्।
विलसत्यचलं पतत्रिराजी ननु राजीवदलायताक्षि पश्य॥

अत्र निर्जनोऽयं देश इति व्यङ्ग्योऽर्थः। स च सुरतार्हत्वं तस्य व्यनक्ति। वाच्यस्य स्थलस्य वैशिष्ट्यात्।

अधुना मुदिरागमे मनोज्ञाः सखि रत्नद्युतिदीपिता वडभ्यः।
निपतत्परिगर्जिताम्बुधारामुखरीभूतगृहान्तरा भवति॥

अत्र क्व कान्तमानेष्यामीति सङ्केतमिङ्गितेन पृच्छन्तीं दूतीं प्रति नेदानीं कुञ्जो रम्यः किन्तु भवनमेवेति वाच्योऽर्थो व्यञ्जयति कालवैशिष्ट्यात्।

अरविन्दमरन्दसम्भृतः सखि यस्मिन्नमते समीरणः।
नवपल्लवमन्दिरं जनः प्रतिपद्येत पदं शुभेन तत्॥

अत्र कान्तेन कृष्णेन सार्धं तत्र मां संयोजयेति वाच्योऽर्थो द्योतयति देशवैशिष्ट्यात्। यत्र शब्द-स्य प्राधान्येन व्यञ्जकत्वं तत्रार्थस्य गौणं तत्। यत्र त्वर्थस्य प्राधान्येन व्यञ्जकत्वं तत्र शब्दस्य तद्गौणमिति प्राधान्यसव्यपेक्ष्यशाब्दार्थी च व्यञ्जनेत्युक्तिः॥

इति काव्यकौस्तुभे शब्दार्थतद्वृत्तिनिणयो द्वितीया प्रभा॥

# Chapter 3

# तृतीया प्रभाः रसनिर्णयः

एवं काव्यशरीरभूतौ शब्दार्थौ निरूप्येदानीं तदात्मभूतान्रसादीन्निरूपयति। तत्र रसस्वरूपमाह॥

विभावैरनुभावैश्च सात्त्विकैर्व्यभिचारिभिः।
व्यक्तो रत्यादिकः स्थायी विद्वद्भिः कथितो रसः॥

एतद्व्याचष्टे —

रत्यादेः स्थायिनस्तस्यालम्बनोद्दीपनाह्वयं।
निमित्तकारणं प्राज्ञैर्विभावः परिकीर्त्यते॥
स्थायिनामाश्रयो यस्तु स स्यादालम्बनो मतः।
तेषामुद्दीपकः प्रोक्तो बुधैरुद्दीपनाभिधः॥
ललनादिर्यथाख्याता यथा च विपिनादिकं।
अनुभावस्तु रत्यादेरुपजातः स्मितादिकं॥
सात्त्विकाः स्तम्भरोमाञ्चवैवर्ण्यस्वेदसंलयाः।
स्वरभङ्गाश्रुकम्पाश्च रसज्ञैरष्ट कीर्तिताः॥
स्थायिनः पोषको निर्वेदादिः सञ्चारिसंज्ञकः।
निर्वेदग्लानिदैन्यानि शङ्कासूयामदश्रमाः॥

आलस्यमोहस्मृतयो धृतिचिन्तामृतित्रपाः।
आवेगहर्षचापल्यजाड्यगर्वविषणताः॥
स्वप्नौत्सुक्यावहित्थाश्च निद्रामर्षौ मतिस्तथा।
औग्र्यापस्मारसन्त्रासबोधव्याधिवितर्ककाः।
उन्मादश्चेत्यमी त्रिंशत्त्रयश्च व्यभिचारिणः॥
रजस्तमोनिर्हीनस्य शुद्धसत्त्वस्य चेतसः।
धर्मो निगदितः स्थायी रसोपादानतां गतः॥
विभावादेः पृथक्त्वेन पार्थक्यं यात्यसावपि॥

स च नवविधः

रतिहासौ तथा शोकः क्रोधोत्साहभयानि च।
जुगुप्साविस्मयशमाः स्थायिनो नव कीर्तिताः॥
चतुर्भिर्व्यञ्जकैरेभिः प्रबन्धे चारुतां गतैः।
आस्वादाङ्कुरकन्दोऽसौ व्यक्तः स्ह्तायी रसायते॥

यदुक्तं —

साधारण्येन विज्ञातैर्विभावाद्यैर्विमिश्रितः।
च्युतवेद्यान्तरः स्थायी चमत्कारिसुखं रस इति॥
आनन्दांशे विभावाद्यैर्बलिष्टैर्भग्नसंवृतिः।
आत्मा रत्याद्यवच्छिन्नो रसः स्यादिति केचन॥

स च रसो नवविधः —

शृङ्गारहास्यकरुणा रौद्रवीरभयानकाः।
बीभत्साद्भुतशान्ताश्च नवाचार्यै रसाः स्मृताः॥
श्यामः पाण्डुर्धूम्रो रक्तो गौरस्तथैव कालश्च।
नीलश्च पिङ्गलश्चापि श्वेतश्चेति क्रमादमी बोध्याः॥

नन्दात्मजहलिसीतापतिभार्गवकल्किनः क्रमतः।
किरिबुद्धकूर्मकपिलाश्चापि रसानां स्मृतादेवाः॥

इति रससामान्यनिरूपणम्।

अथ विशेषेण ते निरूप्यन्ते। तत्र शृङ्गारः।

प्रोक्त मनोऽनुकूलेऽर्थे रतिश्चेतोऽनुरञ्जनं।
शृङ्गारस्थायितामेति कान्तत्वेऽर्थस्य तस्य तत्॥
कान्तादन्यत्र तत्प्रतीतिः पाञ्चाल्याः श्रिहरौ यथा।
यूनोः सखीषु सखीषु मैत्री तत् स्यात्परस्परं॥
यत्र स्पर्शश्च हासश्च यथायथमुदीक्ष्यते।
सम्भोगो विप्रलम्भश्च शृङ्गारो द्विविधो मतः॥

तत्र सम्भोगः —

रतिरेषा विभावाद्यैरुचितैर्व्यक्तिमागता।
आलिङ्गनादिहेतुश्चेत्तदा सम्भोग उच्यते॥

यथा —

त्वं मुग्धाक्षि विनैव कञ्चुलिकया धत्से मनोहारिणीं।
लक्ष्मीमित्यभिधायिनि प्रियतमे तद्वीटिकासंस्पृषि।

शय्योपान्तनिविष्टसस्मितवधूनेत्रोत्सवानन्दितो।
निर्यातः शनकैरलीकवचनोपन्यासमालीजनः॥

यथा वा –

सख्यास्तवानङ्गरसोत्सवेऽधुना
ननर्त मुक्तालतिका स्तनोपरि।
उत्प्लुत्य यस्याः सखि नायकश्चलो
धीरं मुहुर्मे प्रजहार कौस्तुभं

मिथोऽवलोकमाध्वीकपानादिर्बहुधा ह्यसौ।

मिथोऽवलोको यथा —

एहीति पृष्टगसखीरणकैतवेन
व्यावृत्त्य यो मयि तथा विहितः कटाक्षः।
प्रत्यस्त्रवन्मम कटाक्षमवाच्यशान्तौ
प्यन्तर्विभेद स निकृन्तशरार्द्धवन्मे॥

एवमन्ये तूह्याः।

अथ विप्रलम्भः।

अयुक्तयोर्युक्तयोर्वा यूनोः श्लेषाद्यभावतः।
प्रकृष्यति रतिः सा चेद्विप्रलम्भस्तदोच्यते।
पूर्वरागस्तथा मानः प्रवासश्चेति स त्रिधा॥

तत्र पूर्वरागः —

रतिर्या सङ्गमात्पूर्वं पूर्वरागः सा कीर्त्यते॥

यथा —

इन्दीवरोदरसहोदरमेदुरश्रीर्
वासो द्रवत्कनकवृन्दनिभं दधानः।
आमुक्तमौक्तिकमनोहरहारवक्षाः
कोऽयं युवा जगदनङ्गमयं करोति॥

यथा वा —

कनकाद्रिनिकेतकेतकी कलिता कल्पकलेवरद्युतिः।
हृदि सा मुदिरालिमेदुरे चपला मां किमलं करिष्यति॥

अत्र दशदशाः ।

लालसोद्वेगजाड्यानि तानवव्याधिजागराः।
उन्मादव्यग्रतामोहा मृत्युश्चेति दशा दश॥

मृत्युशब्देन मूर्च्छोच्यते।

अथ मानः —

एक्र स्थितयोर्यूनोरन्योन्यमनुरक्तयोः।
रतिस्तुम्बाद्यहेतुश्चेत्तदा मानः प्रकीर्त्यते॥

यथा —

स्वप्ने व्यलीकं वनमालिनोक्तं
पालीत्युपकर्ण्य विवर्णवक्त्रा।
श्यामा विनिश्वस्य मधुत्रियामां
सहस्रयामामिव साभ्यनैषीत्
निर्हेतुकोऽपि मानो गम्यः॥

अथ प्रवासः।

यथ —

मुग्धा सुधांशुकिरणे
जालगते भवनदाहचकिताक्षी।
आदातुमवधिलेखं
प्रविशति भवनं निवार्य सहयान्तीः॥

## 3.1 अथ विभावादिषु नायकभेदाः

धीरोदात्तो धीरोद्धतश्च धीरप्रशान्तश्च।
धीरललितः क्रमेणैषां लक्षणानि लक्ष्याणि च॥
क्षमी गम्भीरो निगूढगर्वो महासत्वः।
श्लाघाशून्यः शुभवाग्धीरोदात्तो दृढव्रतः कथितः॥

यथा —

वीरं मन्यमदप्रहारिहसितं धौरेयमार्तोद्धृतौ
निर्व्यूढव्रतमुन्नतक्षितिधरोद्धारेण धीराकृतिम्।

मय्युच्चैः कृतकिल्विषेऽपि मधुरं स्तुत्या मुहुर्यन्त्रितं
प्रेक्ष्य त्वां मम दुर्वितर्क्यहृदयं धीर्गीश्च न स्पन्दते॥

स्वश्लाघातिरतौ मायी मत्सरी क्रोधनश्चलः।
अहंयुः कथितो धीरोद्धतोऽसौ रसवेदिभिः॥

यथा —

विच्छातच्छिद्रमन्विच्छ विमूर्छन्म्लेच्छदर्दुर।
प्रसर्पन् कृष्णसर्पस्त्वां भक्षयत्येष सक्षणः॥

विनयी विवेकयुक्तो विपदां सहन्श्च शान्तश्च।
धीरप्रशान्तः स कथितो मुनिनातिधर्मिष्टः॥

यथा —

श्रुतवर्णधर्मनिरता निजप्रजाः
प्रतिरञ्जयन्ननुगतक्रियोदयः।
हरिभक्तिरत्नपरितुष्टमानसः
पृथिवीं प्रशास्ति नृपतिर्युधिष्ठिरः॥

परिहासपटुर्मृदुलः कलाकलापाञ्चितस्तरुणः।
कान्तावशगश्चिन्तारहितः कथितोऽत्र धीरललितोऽयम्॥

यथा —

सुस्मेरां व्रजतरुणीं चलालकां तां
संपश्यन्मधुरिमभारसन्नताङ्गीं।
सानन्दः पुलककुलाकुलोज्ज्वलश्रीः
शुद्धान्ते शुभवति माधवश्चकास्ति॥

एषोऽनुकूलदक्षिणशठधृष्टतया चतुर्विधोऽभिमतः।
निखिलाश्चतुर्विधाः स्युस्तेनामी षोडशोदिताः कैश्चित्॥

अनुकूलादीनां लक्षणानि।

एकाश्रितोऽनुकूलः समः समस्तासु दक्षिणः प्रोक्तः।
शठ एकस्यां रक्तो बहिः परस्यां धृतप्रणयः॥
समन्तुरपि निःशङ्कस्तर्जितोऽपि न लज्जितः।
दृष्टदोषोऽपि मिथ्यावाक् प्रोक्तोऽसौ धृष्टनामकः॥

एषां लक्ष्याणि मृग्याणि॥

इति नायकभेदाः

अथैषां गुणाः।

श्रीमान् कृती कृतज्ञश्च रूपयौवनमण्डितः।
त्यागी दक्षोऽनुरक्तश्च तेजस्वी चतुरः सुधीरित्यादयः॥

शोभा विलासो गाम्भीर्यं स्थैर्यं माधुर्यतेजस्वी।
औदार्यं ललितं चेति सत्त्वजं गुणाष्टकम्॥

तत्र शोभा —

नीचे कृपाधिके स्पर्द्धा सत्यशौर्यातिदक्षताः।
उत्साहश्चानुरागश्च शोभा स्युर्मिलिता इमे॥

यथा —

स्वर्गध्वंसं विधित्सुर्व्रजभुवि कदनं सुष्ठु वीक्ष्यातिवृष्ट्या
नीचानालोच्य पश्चान्नमुचिरिपुमुखानूढकारुण्यवीचिः।
अप्रेक्ष्य स्वेन तुल्यं कमपि निजरुषामत्र पर्याप्तिपात्रं
बन्धूनानन्दयिष्यन्नुदहरत हरिः सत्यसङ्गो महाद्रिम्॥

विलासः —

कल्पनं रम्यवेषादेर्विलासः कथ्यते बुधैः।

यथा —

विचित्रगुञ्जागिरिधातुचित्र-
विभूषितोऽसौ सखीभिर्मुरारिः।
स्वयं च तान्कौतुकतः कलावान्
विभूषयंस्तैर्विजहार सार्द्धम्॥

गाम्भीर्यं —

भीकोपशोकहर्षाद्यैर्गाम्भीर्यमविकारिता।

यथा —

नो कथ्यते किमु कथाविषयो यदि स्यान्
नो गोप्यते किमु भवेद्यदि गोपनीयः।
आपच्यमान इव हृद्व्रण एष भावः
कृष्णस्य कामपि दशां भजते न विद्मः॥

स्थैर्यम् —

स्वनिश्चयादचलनं स्थैर्यं विघ्ने महत्यपि।

यथा —

प्रतिकूलेऽपि सशूले शिवायां निरंशुकायां च।
व्यलुनादेव मुकुन्दो विन्ध्यावलीनन्दनस्य भुजान्॥

माधुर्यम् —

सर्वथा स्पृहणीयत्वं माधुर्यं परिकीर्त्यते।

यथा —

निरस्य रत्नाभरणानि माधव इत्यादि।

तेजः —

अवज्ञादेरसहनं तेजः सद्भिरीर्यते।

यथा —

व्रजाधिपे शूरसुते च कंसेनाकृश्यमाने किल निग्रहाय।
चुकूर्दिषुर्मञ्चमधिष्ठितिज्ञस्ताम्रांबकः पश्य हरिर्विभाति॥

औदार्यं —

मित्रामित्रेषु यत्साम्यं तदौदार्यं प्रकीर्तितं॥

यथ —

आपीय पूतनायाः सहचरजननीगणस्य स्तन्यं।
सदयः सममेव ददौ जननीत्वं यः स एव पायात्॥

ललितं —

शृङ्गारप्रचुरा चेष्टा ललितं कथ्यते बुधैः॥

यथा —

विपिनलतादलकुसुमैर्विभूष्य राधां हरिः प्राह।
त्वं सुमुखि कृष्णपक्ष-प्रणयवती कुञ्जदेवता कापि॥

इति नायकगुणाः॥

## 3.2 अथ तत्सहायाः

नायकस्य सहायाः स्युः सखायस्तेषु केचन।
रहस्यज्ञाः प्रियसखाः प्रियनर्मसखास्तथा॥
दूताश्च त्रिविधास्तेषु निसृष्टार्थोऽमितार्थकः।
सन्देशहारकश्चेति स्फुटमग्रे भविष्यति॥

इति सहायाः॥

## 3.3 अथ नायिकाभेदाः

परकीया स्वकीया च नायिका द्विविधा मता।
ऊढानूढा च तत्राद्या द्विविधा परिकीर्तिता॥

अनूढां वर्जयित्वाअत्र द्विविधा नायिका तु या।
मुग्धा मध्या प्रगल्भा च प्रत्येकं सा त्रिधा स्मृता॥

धीराश्च स्युरधीराश्च धीराधीराश्च नायिकाः।
मुग्धां विहाय तेनैता बुधैः पञ्चदशोदिताः॥

लौकिके परकीया तु कन्यैवाभिमता भवेत्।
अलौकिके परोढापि कृष्णनन्यैव सम्मता॥

शतं ता विंशतिश्च स्युरवथाभिरथाष्टभिः।

तत्र कन्या —

पित्राद्यर्पणतः पूर्वं तदादिरप्यसम्मतौ।
जातानुरागा कन्या चेत् परकीयैव सम्मता॥
दुर्गार्चनपराः कन्या यथा श्रिगोकुले स्मृताः।
अन्यैर्व्यूढा अपि स्नेहाद्गोविन्दार्पितविग्रहाः।
करग्रहविधिं प्राप्ता भर्तुर्वचनतत्पराः।
स्वकीयाः कथितास्तास्तु द्वारवत्यां रुक्मिणीमुखाः॥